# भारतस्य संविधानम्

[ १४-१-१९८५ दिनाङ्के यथाविद्यमानम् ]

( द्विपञ्चाशत्तमसंशोधनसहितम् )

विधायीविभागस्य राजभाषाखण्डः

भारतशासनम्

१९८५

# भारतस्य संविधानम्

[ १४-१-१९८५ दिनाङ्के यथाविद्यमानम् ]

( द्विपञ्चाशत्तमसंशोधनसहितम् )

विधायीविभागस्थ राजभाषाखण्डः

भारतशासनम्

१९८५

## प्राक्कथनम्

संविधानसभायाः अध्यक्षस्य प्राधिकारेण १९५०-तमे वर्षे प्रणीते संस्कृतपाठे अद्यावधि सञ्जातानि संविधानस्य सर्वाणि संशोधनानि समावेश्य भारतस्य संविधानस्य संस्कृतभाषायां इदं संस्करणं प्रकाशमानीयते। संस्कृतभाषान्तरणाय, शास्त्रीयशब्दानां निर्माणाय च प्रयुक्ता पद्धतिः प्रथमसंस्करणस्य प्राक्कथने वर्णिता आसीत्। सर्वेषां सौकर्याय तत्प्राक्कथनं अत्र उद्ध्रियते।

संविधानस्य केषांचिदध्यायानां पद्यमये संस्कृते भाषान्तरकारेण मुम्बय्याः उच्चन्यायालयस्य अधिवक्तृणा श्री०एम०एम० दवेमहोदयेन संशोधनानां एतद् भाषान्तरणं प्रणीतं, केन्द्रीयानुवादकार्यालयस्य पूर्ववर्तिना निदेशकेन श्री०काशिरामशर्ममहोदयेन परिष्कृतं च।

१४ जान्युआरी, १९८५ ख्रिस्तीयः
२४ पौषः, १९०६ शकाब्दः
(मकरसङ्क्रान्तिः)

रु० वेङ्कट सूर्य पेरिशास्त्री
विधिन्यायमन्त्रालये
विधायिविभागे
सचिवः

## प्रथमसंस्करणस्य प्राक्कथनम्

संस्कृतभाषायां संविधानभाषान्तरस्य कीदृशी रीतिरनुसरणीया इत्यस्मिन् विषये संविधानसभायाः सभापतिना संसदः सभापतिना च ये नियमाः कृता साधारणतस्तान् नियमाननुसृत्यैवेदं भाषान्तरं प्रणीतमस्ति। संस्कृतभाषान्तर-समितिः खलु स्वभाषान्तरार्थं स्वाभिमतपरिभाषावलम्बने न स्वतन्त्राऽऽसीत्। यतः भारतीयभाषाणामर्थे संविधानस्य भाषान्तरेषु साधारणपरिभाषाकोशः तदर्थं नियुक्तया समित्या प्रणीत एव प्रायः समवलम्बनीयः इत्येवं संविधान सभायाः संसदश्च सभापतिना निर्दिष्टं नियमं पुरस्कृत्यैवेदं भाषान्तरं कर्तव्यमासीत्। किंच संसदः सभापतिना एवमप्याज्ञापितमस्ति यत् संविधानस्यास्य हिन्दीभाषायां कृते भाषान्तरे ये संस्कृताः शब्दाः त एव यावच्छक्यम्-अन्येषु भाषान्तरेष्वपि प्रयोक्तव्याः इति, तदनुरोधेन यथासंभवं हिन्दीभाषान्तरस्थाः शब्दा अप्यादृताः। भाषान्तरं चेदं शब्दशः वाक्यशः वाक्यखण्डक्रमशश्च कृतम्।

तथापि अत्र निम्नलिखिता विशेषा अवधारणीयाः। साधारणपरिभाषाकोशे परिगणितानां शब्दानां मध्ये ये शब्दाः संस्कृतभाषान्तर्गता न सन्ति, यथा शर्त (condition), आस्तियाँ (assets), मंजूरी (sanction), हक़ (title), जाँच (enquiry), दिवालिया (insolvent), सिपारिश (recommendation), नौकरी (employment), दर (rate), क़रार (agreement), क़ारखाना (factory), फ़ायदा (benefit), दावा (claim), तैयार करना (preparation), व्याज (interest) इत्यादयः शब्दाः; तेषां स्थाने संस्कृताः शब्दाः साधारण-परिभाषाकोशे अपरिगणिता अपि संनिविष्टाः, यथा प्रतिबन्धः (शर्त), सर्वस्वम् (आस्तियां), स्वीकृतिः (मंजूरी), स्वत्वम् (हक़), परिपृच्छा (जाँच), ऋणशोधनाशक्तः (दिवालिया), पुरःप्रशंसनम् (सिपारिश), नियोजनम् (नौकरी), अर्घः मानं वा (दर), समयः (क़रार), कर्मान्तम् (कारखाना); हितम् (फायदा), अध्यर्थना ममत्वावेदनं वा (दावा), परिकल्पनं सज्जीकरणं वा (तैयार करना), वृद्धिः (व्याज) इत्यादयः। किंच, साधारणपरिभाषाकोशे ये शब्दाः संस्कृतभाषान्तर्गता इव भान्ति किन्तु वस्तुतः व्याकरणदृष्ट्या अशुद्धाः सन्ति, यथा अन्तर्कालीन (transitional), वयस्क (adult), अन्तर्राज्यिक (interstate), अन्तर्राष्ट्रीय (international) परन्तुक (proviso), वृत्तिक (professional), राजनैतिक (political) इत्यादयः; तेषां स्थाने क्रमेण संक्रमणकालीन, प्राप्तवयस्क, आन्ताराज्यिक, आन्ताराष्ट्रिक, पारन्तुक, वृत्तिसंबन्धि, राजनीतिक इत्यादयः संनिविष्टाः सन्ति।

यद्यपि अस्मिन् भाषान्तरे बहवः परिभाषिताः शब्दा यमर्थमभिसंधाय प्रयुक्तास्तस्मिन्नर्थे प्राचीनसंस्कृत-भाषाग्रन्थेषु नोपलभ्येरन् तथापि अस्मिन् संविधाने निर्देष्टुमिष्टा अर्थाः कल्पनाश्च नूतना विद्यन्ते इति नवीनं संकेतमभिप्रेत्य कृतस्तेषां प्रयोगो न दोषमावहेत्।

अथ च, इदं भाषान्तरम् आङ्ग्लभाषायां विद्यमानस्य संविधानस्य शब्दशः वाक्यशः वाक्यखण्डक्रमशश्च कृतमिति, या हि प्रसिद्धानां संस्कृतग्रन्थानां प्रसिद्धा शब्दवाक्यक्रमनिवेशनरीतिः सात्र नोपलभ्येत। इत्यतः सुबहुपरिचयात् प्रागर्थबोधः क्लेशेनैव जायेत। कतिपयेषु स्थलेषु च बोधोऽपि न जायेत। ये हि आङ्ग्लसंविधान-चतुरास्ते तु प्रभवेरन् अस्यार्थग्रहणे यदि संस्कृतभाषाप्रवीणाः, इति विश्वसिमः।

संसदः सभापतिना 'संस्कृतभाषान्तरसमित्या नियुक्तः एकः भाषान्तरकर्ता भाषान्तरं करोतु द्वौ वा कुरुतां संस्कृतभाषान्तरसमितिश्च तद् भाषान्तरं संस्कृत्य स्वीकुर्यात्' इत्येतादृशं कृतं नियममनुसृत्य संस्कृतभाषान्तर-समित्या समितेः सदस्यावेव द्वौ भाषान्तरकर्तारौ नियुक्तौ, संविधानपूर्वार्धस्य (अनुच्छेदाः १—२६३) कृते श्री० लक्ष्मणशास्त्री जोशीत्युपाह्वः, अनुसूचीसहितस्योत्तरार्धभागस्य (अनुच्छेदाः २६४—३९५) कृते श्री० मङ्गलदेवशास्त्री च। संविधानसंशोधनाधिनियमस्यापि भाषान्तरं श्री० लक्ष्मणशास्त्रिभिः कृतम्। ताभ्यां प्रणीतं भाषान्तरं संस्कृतभाषान्तरसमित्या दिनद्वाविंशतिपर्यन्तं कृतेऽधिवेशने पठित्वा स्वीकृतम्। बहुषु स्थलेषु समित्याः सर्वेषां सभासदानामैकमत्यमासीत्। क्वचित् नैकमत्यं दृष्टं तत्र बहूनां मतेनेदं भाषान्तरं पुनर्निरीक्ष्य संस्कृत्य च स्वीकृतमिति।

**संस्कृतभाषान्तरसमितिः**

| | | |
|---|---|---|
| १. | म० म० पाण्डुरङ्ग वामन काणे, एम० ए०, एल्एल्० एम्०, मुम्बई | सभापतिः |
| २. | तर्कतीर्थ लक्ष्मणशास्त्री जोशी, धर्मकोशस्य प्रधानसंपादकः, वाई | भाषान्तरकारः संस्कृतभाषान्तरसमितेरामन्त्रकश्च |
| ३. | डॉ० मङ्गलदेवशास्त्री, एम्० ए०, डी० फिल्०, बनारस | भाषान्तरकारः |
| ४. | डॉ० सुनीतिकुमार चतर्जी, एम्० ए०, डी० लिट्०, (लंडन), कलकत्ता | सभासदः |
| ५. | श्री के० बालसुब्रह्मण्यं अय्यर, बी० ए०, बी० एल्०, अॅडव्होकेट, मद्रास | ,, |
| ६. | म० म० गिरिधरशर्मा चतुर्वेदी, डायरेक्टर संस्कृतस्टडीज्, हिन्दूयुनिव्हर्सिटी, बनारस | ,, |
| ७. | डॉ० बाबूराम सक्सेना, एम्० ए०, डी० लिट्०, अलाहाबाद | ,, |
| ८. | पण्डित राहुल सांकृत्यायन, मसूरी | ,, |
| ९. | डॉ० रघुवीर, नागपूर | ,, |
| १०. | श्री मुनिजिनविजयजी, डायरेक्टर भारतीय विद्याभवन, मुम्बई | ,, |
| ११. | डॉ० कुन्हनराजा, मद्रास | ,, |

# भारतस्य संविधानम्

## प्रस्तावना

वयं, भारतस्य जनाः, भारतं सम्पूर्णप्रभुत्वसम्पन्नं, समाजवादिनं, सम्प्रदायनिरपेक्षं, लोकतन्त्रात्मकं गणराज्यं विधातुं, तस्य समस्तान् नागरिकांश्च

सामाजिकं, आर्थिकं, राजनीतिकं च न्यायं,
विचारस्य, अभिव्यक्तेः, आस्थायाः, धर्मस्य,
उपासनायाश्च स्वतन्त्रतां,
प्रतिष्ठायाः, अवसरस्य च समतां

प्रापयितुं ;
तेषु सर्वेषु च

व्यक्तिगौरवस्य राष्ट्रस्य एकतायाः,
अखण्डतायाश्च सुनिश्चायिकां बन्धुतां

वर्धयितुं ;
कृतदृढसङ्कल्पाः अस्यां अस्मदीयायां संविधानसभायां
अद्य, खिस्तीये १९४९- तमे वर्षे नवम्बर-मासस्य २६- तमे दिने
(२००६- तमे विक्रमसंवत्सरे मार्गशीर्षे शुक्लपक्षे सप्तम्यां तिथौ)
एतेन इदं संविधानं अङ्गीकृतं, अधिनियमितं, आत्मार्पितं च
कुर्महे ।

# भारतस्य संविधानम्

## विषयसूची

अनुच्छेदः पृष्ठसंख्या

### भागः १
### सङ्घः, तस्य राज्यक्षेत्रं च


| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| | प्रस्तावना । | |
| १. | सङ्घस्य नाम, राज्यक्षेत्रं च | १ |
| २. | नूतनराज्यानां प्रवेशः, स्थापना वा | १ |
| २अ. | [निरस्तः] | १ |
| ३. | नूतनानां राज्यानां निर्माणं; विद्यमानानां राज्यानां क्षेत्राणां, सीम्नां, नाम्नां वा परिवर्तनम् | १ |
| ४. | प्रथमानुसूचीं चतुर्थानुसूचीं च संशोधयितुं, अनुपूरकप्रासङ्गिकानुषङ्गिकविषयेषु उपबन्धयितुं च द्वितीयतृतीयानुच्छेदयोः अधीनं प्रणीताः विधयः | २ |


### भागः २
### नागरिकता


| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| ५. | संविधानस्य प्रारम्भे नागरिकता | ३ |
| ६. | पाकिस्तानतः प्रव्रज्य भारतं आगतानां केषांचित् जनानां नागरिकताधिकाराः | ३ |
| ७. | पाकिस्तानं प्रव्रजितानां केषांचित् जनानां नागरिकताधिकाराः | ३ |
| ८. | भारतात्बहिः निवसतां भारतीयसमुद्भववतां केषांचित् जनानां नागरिकताधिकाराः | ३ |
| ९. | यैः स्वेच्छयार्जिता वैदेशिकनागरिकता, न तेषां जनानां नागरिकता | ४ |
| १०. | नागरिकताधिकाराणां अनुवृत्तिः | ४ |
| ११. | संसदा विधिना नागरिकताधिकारविनियमनम् | ४ |


### भागः ३
### मूलाधिकाराः
#### साधारणम्


| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| १२. | परिभाषा | ५ |
| १३. | मूलाधिकारैः असङ्गताः तेषां अल्पीकराः वा विधयः | ५ |


#### समतायाः अधिकारः


| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| १४. | विधिसमक्षे समता | ५ |
| १५. | धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य, जन्मस्थानस्य वा, आधारतः विभेदस्य प्रतिषेधः | ५ |

| अनुच्छेदः | | पृष्ठसंख्या |
| --- | --- | --- |
| १६. | लोकनियोजनविषयेषु अवसरसमता | ६ |
| १७. | अस्पृश्यतायाः निराकरणम् | ६ |
| १८. | सम्मानपदानां निराकरणम् | ६ |
| | **स्वातन्त्र्याधिकारः** | |
| १९. | वाक्स्वातन्त्र्यादि विषयकाणां केषांचित् अधिकाराणां संरक्षणम् | ६ |
| २०. | अपराधानां हेतोः दोषसिद्धेः सम्बन्धे संरक्षणम् | ८ |
| २१. | प्राणानां दैहिकस्वतन्त्रतायाश्च संरक्षणम् | ८ |
| २२. | अवस्थाविशेषेषु बन्दीकरणात्, निरोधात् च संरक्षणम् | ८ |
| | **शोषणविरोधी अधिकारः** | |
| २३. | मानवदुर्व्यापारस्य, बलात् श्रमस्य च प्रतिषेधः | ९ |
| २४. | कर्मान्तादिषु बालानां नियोजनस्य प्रतिषेधः | ९ |
| | **धर्मस्वतन्त्रतायाः अधिकारः** | |
| २५. | अन्तःकरणे, धर्मस्य अबाधं अभ्युपगमे, आचरणे, प्रचारे च स्वतन्त्रता | ९ |
| २६. | धार्मिककार्याणां प्रबन्धे स्वतन्त्रता | १० |
| २७. | कस्यापि धर्मविशेषस्य अभिवृद्ध्यर्थं कराणां सन्दाये स्वतन्त्रता | १० |
| २८. | कासुचित् शिक्षासंस्थासु धार्मिकशिक्षार्थं धार्मिकोपासनार्थं वा उपस्थितौ स्वतन्त्रता | १० |
| | **सांस्कृतिकाः शैक्षिकाश्च अधिकाराः** | |
| २९. | अल्पसङ्ख्यकवर्गाणां हितसंरक्षणम् | १० |
| ३०. | शिक्षासंस्थानां स्थापने प्रशासने च अल्पसङ्ख्यकवर्गाणां अधिकारः | ११ |
| ३१. | [निरस्तः] | ११ |
| | **केषांचित् विधीनां व्यावृत्तिः** | |
| ३१अ. | सम्पदां अर्जनाय उपबन्धकानां विधीनां व्यावृत्तिः | ११ |
| ३१आ. | केषांचित् अधिनियमानां, विनियमानां च विधिमान्यकरणम् | १३ |
| ३१इ. | कानिचित् निदेशकानि तत्त्वानि प्रभावयुक्तानि कुर्वतां विधीनां व्यावृत्तिः | १३ |
| ३१ई. | [निरस्तः] | १३ |
| | **सांविधानिकानां उपचाराणां अधिकारः** | |
| ३२. | अनेन भागेन प्रदत्तानां अधिकाराणां प्रवर्तनाय उपचाराः | १३ |
| ३२अ. | [निरस्तः] | १४ |
| ३३. | अनेन भागेन प्रदत्तानां अधिकाराणां बलादिषु अनुप्रयोगे संसदः उपान्तरणे शक्तिः | १४ |
| ३४. | यावत् कस्मिन् अपि क्षेत्रे सेनाविधिः प्रवृत्तः अस्ति तावत् अनेन भागेन प्रदत्तेषु अधिकारेषु निर्बन्धनम् | १४ |
| ३५. | अस्य भागस्य उपबन्धान् कार्यकरान् कर्तुं विधानम् | १४ |

भागः ४

## राज्यनीतेः निदेशकानि तत्त्वानि


| | | |
|---|---|---|
| ३६. | परिभाषा | १५ |
| ३७. | अस्मिन् भागे अन्तर्विष्टानां तत्त्वानां अनुप्रयोगः | १५ |
| ३८. | लोककल्याणस्य अभिवृद्धये राज्यं सामाजिकव्यवस्थां आसादयेत् | १५ |
| ३९. | राज्येन अनुसरणीयानि कानिचित् नीतेः तत्त्वानि | १५ |
| ३९अ. | न्यायसमानता, निःशुल्का वैधिकसहायता च | १५ |
| ४०. | ग्रामपञ्चायतानां सङ्घटनम् | १६ |
| ४१. | अवस्थाविशेषेषु वृत्तिकर्म, शिक्षां, लोकसाहाय्यं च प्राप्तुं अधिकारः | १६ |
| ४२. | कर्मणः न्याय्यानां मानवोचितदशानां, प्रसूतिसाहाय्यस्य च उपबन्धः | १६ |
| ४३. | श्रमिकाणां कृते निर्वाहवेतनादीनि | १६ |
| ४३अ. | उद्योगानां प्रबन्धे कर्मकराणां भागित्वम् | १६ |
| ४४. | नागरिकाणां अर्थे समाना व्यवहारसंहिता | १६ |
| ४५. | बालकानां अर्थे निःशुल्कायाः अनिवार्यायाः शिक्षायाः उपबन्धः | १६ |
| ४६. | अनुसूचितजातीनां, जनजातीनां, अन्येषां दुर्बलतरवर्गाणां च शैक्षिकार्थिकहिताभिवृद्धिः | १६ |
| ४७. | पोषणाहारस्तरस्य जीवनस्तरस्य च उन्नमनं, सार्वजनिकस्वास्थ्यस्य च सुधारणं राज्यस्य कर्त्तव्यम् | १६ |
| ४८. | कृषेः पशुपालनस्य च सङ्घटनम् | १६ |
| ४८अ. | पर्यावरणस्य संरक्षणं सुधारणं च, वनस्य वन्यजीवानां रक्षणं च | १७ |
| ४९. | राष्ट्रियमहिमशालिनां स्मारकाणां, स्थानानां, वस्तूनां च रक्षणम् | १७ |
| ५०. | न्यायपालिकायाः कार्यपालिकातः पृथक्करणम् | १७ |
| ५१. | आन्ताराष्ट्रियाः शान्तेः सुरक्षायाश्च अभिवृद्धिः | १७ |


भागः ४अ

## मूलकर्त्तव्यानि


| | | |
|---|---|---|
| ५१अ. | मूलकर्त्तव्यानि | १८ |


भागः ५

## सङ्घः

### अध्यायः १—कार्यपालिका

#### राष्ट्रपतिः, उपराष्ट्रपतिश्च


| | | |
|---|---|---|
| ५२. | भारतस्य राष्ट्रपतिः | १९ |
| ५३. | सङ्घस्य कार्यपालिकाशक्तिः | १९ |
| ५४. | राष्ट्रपतेः निर्वाचनम् | १९ |
| ५५. | राष्ट्रपतेः निर्वाचनस्य रीतिः | १९ |
| ५६. | राष्ट्रपतेः पदावधिः | २० |

पृष्ठसंख्या

**अनुच्छेदः** २०

५७. पुनर्निर्वाचने पात्रता २०

५८. राष्ट्रपतेः निर्वाचनस्य अर्हताः २०

५९. राष्ट्रपतेः पदस्य प्रतिबन्धाः २१

६०. राष्ट्रपतेः शपथः प्रतिज्ञानं वा २१

६१. राष्ट्रपतौ महाभियोगे प्रक्रिया

६२. राष्ट्रपतिपदस्य रिक्ततापूर्तये निर्वाचनस्य कालः, आकस्मिकरिक्ततापूर्तये २१
निर्वाचितजनस्य पदावधिश्च २२

६३. भारतस्य उपराष्ट्रपतिः २२

६४. उपराष्ट्रपतिः राज्यसभायाः पदेन सभापतिः

६५. राष्ट्रपतेः पदस्य आकस्मिकरिक्ततायां अनुपस्थितौ वा, उपराष्ट्रपतेः राष्ट्रपतिरूपेण २२
कार्यनिर्वर्तनं, तत्कृत्यनिर्वहणं वा २२

६६. उपराष्ट्रपतेः निर्वाचनम् २३

६७. उपराष्ट्रपतेः पदावधिः

६८. उपराष्ट्रपतिपदस्य रिक्ततापूर्तये निर्वाचनस्य कालः ; आकस्मिकरिक्ततापूर्तये २३
निर्वाचितजनस्य पदावधिश्च २३

६९. उपराष्ट्रपतेः शपथः प्रतिज्ञानं वा २३

७०. अन्यासु आकस्मिकतासु राष्ट्रपतेः कृत्यानां निर्वहणम् २३

७१. राष्ट्रपतेः उपराष्ट्रपतेः वा निर्वाचनेन सम्बद्धाः संसक्ताः वा विषयाः

७२. क्षमादीनां अनुदाने, अवस्थाविशेषेषु च दण्डादेशानां निलम्बने, परिहारे, २४
लघूकरणे वा राष्ट्रपतेः शक्तिः २४

७३. सङ्घस्य कार्यपालिकायाः शक्तेः विस्तारः

**मन्त्रि-परिषत्** २४

७४. राष्ट्रपतये साहाय्यं मन्त्रणां च दातुं मन्त्रिपरिषत् २५

७५. मन्त्रिसम्बन्धिनः अन्ये उपबन्धाः

**भारतस्य महान्यायवादी** २५

७६. भारतस्य महान्यायवादी

**शासनस्य कार्यस्य सञ्चालनम्** २५

७७. भारतशासनस्य कार्यसञ्चालनम् २६

७८. राष्ट्रपतये सूचनादिविषयकाणि प्रधानमन्त्रिणः कर्त्तव्यानि

अध्यायः २—संसद्

**साधारणम्** २६

७९. संसदः सङ्घटनम् २६

८०. राज्यसभायाः संरचना २७

८१. लोकसभायाः संरचना २८

८२. प्रत्येकजनगणनायाः पश्चात् पुनः समायोजनम् २८

८३. संसदः सदनयोः अवधिः

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|


| | | |
|---|---|---|
| ८४. | संसदः सदस्यत्वस्य अर्हता | २८ |
| ८५. | संसदः सत्राणि, सत्राणां अवसानं, विघटनं च | २८ |
| ८६. | राष्ट्रपतेः सदने प्रति अभिभाषणे सन्देशप्रेषणे च अधिकारः | २९ |
| ८७. | संसदः प्रत्येकसत्रारम्भे राष्ट्रपतेः विशेषाभिभाषणम् | २९ |
| ८८. | मन्त्रिणां, महान्यायवादिनश्च सदनयोः सम्बन्धिनः अधिकारः | २९ |
| | **संसदः अधिकारिणः** | |
| ८९. | राज्यसभायाः सभापतिः, उपसभापतिश्च | २९ |
| ९०. | उपसभापतेः पदस्य रिक्तता, पदत्यागः, पदात् अपसारणं च | २९ |
| ९१. | उपसभापतेः अन्यस्य वा जनस्य सभापतिपदस्य कर्त्तव्यानां पालने सभापतिरूपेण कार्यकरणे वा शक्तिः | २९ |
| ९२. | सभापतिः, उपसभापतिः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति | ३० |
| ९३. | लोकसभायाः अध्यक्ष उपाध्यक्षश्च | ३० |
| ९४. | अध्यक्षस्य उपाध्यक्षस्य च पदरिक्तता, पदत्यागः, पदात् अपसारणं च | ३० |
| ९५. | उपाध्यक्षस्य, अन्यस्य वा जनस्य अध्यक्षपदस्य कर्त्तव्यपालने अध्यक्षरूपेण कार्यकरणे वा शक्तिः | ३० |
| ९६. | अध्यक्षः, उपाध्यक्षः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति | ३० |
| ९७. | सभापतेः, उपसभापतेश्च, अध्यक्षस्य, उपाध्यक्षस्य च वेतनानि, भक्तानि च | ३१ |
| ९८. | संसदः सचिवालयः | ३१ |
| | **कार्य-सञ्चालनम्** | |
| ९९. | सदस्यानां शपथः, प्रतिज्ञानं वा | ३१ |
| १००. | सदनयोः मतदानं, रिक्ततासु सतीषु अपि सदनानां कार्यकरणे शक्तिः, गणपूर्तिश्च | ३१ |
| | **सदस्यानां निरर्हता** | |
| १०१. | स्थानानां रिक्तता | ३१ |
| १०२. | सदस्यतायै निरर्हता | ३२ |
| १०३. | सदस्यानां निरर्हतानां प्रश्नेषु विनिश्चयः | ३३ |
| १०४. | ९९-तमानुच्छेदस्य अधीनं शपथस्य प्रतिज्ञानस्य वा करणात् पूर्वं अथवा अनर्हे, निरर्हीकृते वा, स्थानग्रहणात् मतदानात् वा शास्तिः | ३३ |
| | **संसदः, तस्याः सदस्यानां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च** | |
| १०५. | संसदः सदनयोः, तयोः सदस्यानां, तयोः समितीनां च शक्तयः विशेषाधिकारदयश्च | ३३ |
| १०६. | सदस्यानां वेतनानि, भक्तानि च | ३३ |
| | **विधानप्रक्रिया** | |
| १०७. | विधेयकानां पुरःस्थापनस्य, पारणस्य च उपबन्धाः | ३३ |
| १०८. | अवस्थाविशेषेषु उभयोः सदनयोः संयुक्तोपवेशनम् | ३४ |

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| १०९. | धनविधेयकानां विषये विशेषप्रक्रिया | ३५ |
| ११०. | "धनविधेयकानां" परिभाषा | ३५ |
| १११. | विधेयकानि प्रति अनुमतिः | ३६ |
| | **वित्तीयविषयाणां प्रक्रिया** | |
| ११२. | वार्षिकवित्तविवरणम् | ३६ |
| ११३. | प्राक्कलनानां विषये संसदः प्रक्रिया: | ३७ |
| ११४. | विनियोगविधेयकानि | ३७ |
| ११५. | अनुपूरकाणि, अपराणि, अधिकानि वा अनुदानानि | ३८ |
| ११६. | लेखानुदानं, प्रत्ययानुदानं, अपवादानुदानं च | ३८ |
| ११७. | वित्तविधेयकानां विषये विशेषा: उपबन्धा: | ३८ |
| | **साधारणतया प्रक्रिया** | |
| ११८. | प्रक्रियाया: नियमा: | ३९ |
| ११९. | संसदि वित्तीयकार्यसम्बन्धिप्रक्रियाया: विधिना विनियमनम् | ३९ |
| १२०. | संसदि प्रयोज्या भाषा | ३९ |
| १२१. | संसदि चर्चायां निर्बन्धनम् | ३९ |
| १२२. | न्यायालया: संसदः कार्यप्रवृत्तीनां विषये परिप्रश्नं न कुर्युः | ४० |
| | अध्यायः ३—राष्ट्रपतेः विधायिन्यः शक्तयः | |
| १२३. | संसदः विश्रान्तिकाले राष्ट्रपतेः अध्यादेशप्रख्यापने शक्तिः | ४० |
| | अध्यायः ४—सङ्घस्य न्यायपालिका | |
| १२४. | उच्चतमन्यायालयस्य स्थापना, घटनं च | ४० |
| १२५. | न्यायाधीशानां वेतनादीनि | ४१ |
| १२६. | कार्यकारिणः मुख्यन्यायमूर्तेः नियुक्तिः | ४२ |
| १२७. | तदर्थन्यायाधीशानां नियुक्तिः | ४२ |
| १२८. | उच्चतमन्यायालयस्य उपवेशनेषु सेवानिवृत्तन्यायाधीशानां उपस्थितिः | ४२ |
| १२९. | उच्चतमन्यायालयः अभिलेखन्यायालयः | ४२ |
| १३०. | उच्चतमन्यायालयस्य स्थानम् | ४२ |
| १३१. | उच्चतमन्यायालयस्य प्रारम्भिकाधिकारिता | ४२ |
| १३१अ. | [निरस्तः] | ४३ |
| १३२. | केषुचित् न्यायविषयेषु उच्चन्यायालयेभ्यः प्राप्तासु पुनर्विचारप्रार्थनासु उच्चतमन्यायालयस्य पुनर्विचाराधिकारिता | ४३ |
| १३३. | व्यावहारिकविषयेषु उच्चन्यायालयेभ्यः प्राप्तासु पुनर्विचारप्रार्थनासु उच्चतमन्यायालयस्य पुनर्विचारप्रार्थनासम्बन्धिनी अधिकारिता | ४३ |
| १३४. | आपराधिकेषु विषयेषु उच्चतमन्यायालयस्य पुनर्विचारप्रार्थनासम्बन्धिनी अधिकारिता | ४४ |
| १३४अ. | उच्चतमन्यायालये पुनर्विचारप्रार्थनाकृते प्रमाणपत्रम् | ४४ |
| १३५. | विद्यमानविध्यधीनं 'फेडरल' न्यायालयस्य अधिकारिता, शक्तयश्च उच्चतमन्यायालयेन प्रयोक्तव्याः | ४४ |

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| १३६. | पुनर्विचारप्रार्थनार्थं उच्चतमन्यायालयस्य विशेषानुमतिः | ४५ |
| १३७. | उच्चतमन्यायालयेन कृतानां निर्णयानां आदेशानां च पुनर्विलोकनम् | ४५ |
| १३८. | उच्चतमन्यायालयस्य अधिकारितायाः वृद्धिः | ४५ |
| १३९. | केषांचित् लेखविशेषाणां प्रचालनार्थं उच्चतमन्यायालयाय शक्तीनां प्रदानम् | ४५ |
| १३९अ. | केषांचित् वादानां अन्तरणम् | ४५ |
| १४०. | उच्चतमन्यायालयस्य आनुषङ्गिकशक्तयः | ४६ |
| १४१. | उच्चतमन्यायालयेन घोषितः विधिः सर्वन्यायालयानां आबद्धकारी | ४६ |
| १४२. | उच्चतमन्यायालयस्य आज्ञप्तीनां, आदेशानां च प्रवर्तनं; प्रकटनादीनां विषये आदेशाश्च | ४६ |
| १४३. | उच्चतमन्यायालयेन परामर्शाय राष्ट्रपतौ शक्तिः | ४६ |
| १४४. | उच्चतमन्यायालयस्य साहाय्ये असैनिकैः न्यायिकैश्च प्राधिकारिभिः कार्यकरणम् | ४६ |
| १४४अ. | [निरस्तः] | ४६ |
| १४५. | न्यायालयस्य नियमादयः | ४७ |
| १४६. | उच्चतमन्यायालयस्य अधिकारिणः, सेवकाः, व्ययाश्च | ४८ |
| १४७. | निर्वचनम् | ४८ |

## अध्यायः ५—भारतस्य नियन्त्रकमहालेखापरीक्षकः

| | | |
|---|---|---|
| १४८. | भारतस्य नियन्त्रकमहालेखापरीक्षकः | ४८ |
| १४९. | नियन्त्रकमहालेखापरीक्षकस्य कर्तव्यानि शक्तयश्च | ४९ |
| १५०. | सङ्घस्य राज्यानां च लेखानां प्ररूपम् | ४९ |
| १५१. | लेखापरीक्षाप्रतिवेदनानि | ४९ |

## भागः ६

## राज्यानि

### अध्यायः १—साधारणम्

| | | |
|---|---|---|
| १५२. | परिभाषा | ५० |

### अध्यायः २—कार्यपालिका

#### राज्यपालः

| | | |
|---|---|---|
| १५३. | राज्यानां राज्यपालाः | ५० |
| १५४. | राज्यस्य कार्यपालिका शक्तिः | ५० |
| १५५. | राज्यपालस्य नियुक्तिः | ५० |
| १५६. | राज्यपालस्य पदावधिः | ५० |
| १५७. | राज्यपालरूपेण नियुक्तये अर्हताः | ५० |
| १५८. | राज्यपालपदस्य प्रतिबन्धाः | ५० |
| १५९. | राज्यपालस्य शपथः, प्रतिज्ञानं वा | ५१ |
| १६०. | आकस्मिकताविशेषेषु राज्यपालस्य कृत्यानां निर्वहणम् | ५१ |
| १६१. | क्षमादीनां अनुदाने अभियोगविशेषेषु च दण्डादेशानां निलम्बने, परिहारे, लघूकरणे वा राज्यपालस्य शक्तिः | ५१ |
| १६२. | राज्यस्य कार्यपालिकायाः शक्तेः विस्तारः | ५१ |

अनुच्छेदः पृष्ठसंख्या

मन्त्रिपरिषत्


१६३. राज्यपालाय साहाय्यस्य मन्त्रणायाश्च प्रदानार्थं मन्त्रिपरिषत् ५१

१६४. मन्त्रिसम्बन्धिनः अन्ये उपबन्धा ५२


राज्यस्य महाधिवक्ता


१६५. राज्यस्य महाधिवक्ता ५२


शासनकार्यस्य सञ्चालनम्


१६६. राज्यशासनस्य कार्यसञ्चालनम् ५२

१६७. राज्यपालाय सूचनादिविषयकाणि मुख्यमन्त्रिणः कर्तव्यानि ५३


अध्यायः ३—राज्यस्य विधानमण्डलम्

साधारणम्


१६८. राज्यविधानमण्डलानां घटनम् ५३

१६९. राज्येषु विधानपरिषदां उत्सादनं, सर्जनं वा ५४

१७०. विधानसभानां संरचना ५४

१७१. विधानपरिषदां संरचना ५५

१७२. राज्यविधानमण्डलानां अवधिः ५५

१७३. राज्यविधानमण्डलस्य सदस्यत्वस्य अर्हता ५६

१७४. राज्यविधानमण्डलस्य सत्राणि, सत्रावसानं, विघटनं च ५६

१७५. राज्यपालस्य सदनं सदने वा प्रति अभिभाषणे सन्देशप्रेषणे च अधिकारः ५६

१७६. राज्यपालस्य विशेषाभिभाषणम् ५६

१७७. मन्त्रिणां महाधिवक्तुश्च सदनयोः सम्बन्धिताः अधिकाराः ५६


विधानमण्डलस्य अधिकारिणः


१७८. विधानसभायाः अध्यक्षः उपाध्यक्षश्च ५७

१७९. अध्यक्षस्य उपाध्यक्षस्य च पदरिक्तता, पदत्यागः, पदात् अपसारणं च ५७

१८०. उपाध्यक्षस्य, अन्यस्य वा जनस्य अध्यक्षपदस्य कर्तव्यपालने अध्यक्षरूपेण कार्यकरणे वा शक्तिः ५७

१८१. अध्यक्षः, उपाध्यक्षः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति ५७

१८२. विधानपरिषदः सभापतिः, उपसभापतिश्च ५७

१८३. सभापतेः उपसभापतेश्च पदरिक्तता, पदत्यागः, पदात् अपसारणं च ५८

१८४. उपसभापतेः अन्यस्य वा जनस्य सभापतिपदस्य कर्तव्यपालने सभापतिरूपेण कार्यकरणे वा शक्तिः ५८

१८५. सभापतिः उपसभापतिः वा पीठासीनः न स्यात् यदा तस्य स्वपदात् अपसारणाय सङ्कल्पः विचाराधीनः अस्ति ५८

१८६. अध्यक्षस्य उपाध्यक्षस्य सभापतेः उपसभापतेश्च वेतनानि, भक्तानि च ५८

१८७. राज्यविधानमण्डलस्य सचिवालयः ५८

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|


**कार्यसञ्चालनम्**

| | | |
|---|---|---|
| १८८. | सदस्यानां शपथः, प्रतिज्ञानं वा | ५९ |
| १८९. | सदनेषु मतदानं, रिक्ततासु सतीषु अपि सदनानां कार्यकरणे शक्तिः, गणपूर्तिश्च | ५९ |

**सदस्यानां निरर्हता:**

| | | |
|---|---|---|
| १९०. | स्थानानां रिक्तता | ५९ |
| १९१. | सदस्यतायै निरर्हता: | ६० |
| १९२. | सदस्यानां निरर्हतानां प्रश्नेषु विनिश्चयः | ६० |
| १९३. | १८८-तमानुच्छेदस्य अधीनं शपथस्य प्रतिज्ञानस्य वा करणात् पूर्वं अथवा अनर्हे, निरर्हीकृते वा स्थानग्रहणात् मतदानात् वा शास्तिः | ६१ |

**राज्यविधानमण्डलानां, तेषां सदस्यानां च शक्तयः, विशेषाधिकाराः, उन्मुक्तयश्च**

| | | |
|---|---|---|
| १९४. | विधानमण्डलसदनानां, तत् सदस्यानां, तत् समितीनां च शक्तय: विशेषाधिकारादयश्च | ६१ |
| १९५. | सदस्यानां वेतनानि, भक्तानि च | ६१ |

**विधानप्रक्रिया**

| | | |
|---|---|---|
| १९६. | विधेयकानां पुरः स्थापनस्य, पारणस्य च उपबन्धाः | ६१ |
| १९७. | धनविधेयकेभ्यः अन्यविधेयकसम्बन्धिषु विधानपरिषदः शक्तिषु निर्बन्धनानि | ६२ |
| १९८. | धनविधेयकानां विषये विशेषप्रक्रिया | ६२ |
| १९९. | धनविधेयकानां परिभाषा | ६३ |
| २००. | विधेयकानि प्रति अनुमतिः | ६३ |
| २०१. | विचारार्थं आरक्षितानि विधेयकानि | ६४ |

**वित्तीयविषयाणां प्रक्रिया**

| | | |
|---|---|---|
| २०२. | वार्षिकवित्तविवरणम् | ६४ |
| २०३. | प्राक्कलनानां विषये विधानमण्डलस्य प्रक्रिया | ६५ |
| २०४. | विनियोगविधेयकानि | ६५ |
| २०५. | अनुपूरकाणि, अपराणि, अधिकानि वा अनुदानानि | ६५ |
| २०६. | लेखानुदानं, प्रत्ययानुदानं, अपवादानुदानं च | ६६ |
| २०७. | वित्तविधेयकानां विषये विशेषाः उपबन्धाः | ६६ |

**साधारणतया प्रक्रिया**

| | | |
|---|---|---|
| २०८. | प्रक्रियायाः नियमाः | ६६ |
| २०९. | राज्यविधानमण्डले वित्तीयकार्यसम्बन्धिप्रक्रियायाः विधिना विनियमनम् | ६७ |
| २१०. | विधानमण्डले प्रयोज्या भाषा | ६७ |
| २११. | विधानमण्डले चर्चायां निर्बन्धनम् | ६७ |
| २१२. | न्यायालयाः विधानमण्डलस्य कार्यप्रवृत्तीनां विषये प्रतिप्रश्नं न कुर्युः | ६७ |

अध्यायः ४—राज्यपालस्य विधायिन्यः शक्तयः

| | | |
|---|---|---|
| २१३. | विधानमण्डलस्य विश्रान्तिकाले राज्यपालस्य अध्यादेशप्रख्यापने शक्तिः | ६७ |

अनुच्छेदः पृष्ठसंख्या

अध्यायः ५ —राज्यानां उच्चन्यायालयाः


२१४. राज्यानां कृते उच्चन्यायालयाः ६८

२१५. उच्चन्यायालयाः अभिलेखन्यायालयाः ६८

२१६. उच्चन्यायालयानां घटनम् ६९

२१७. उच्चन्यायालये न्यायाधीशस्य नियुक्तिः तस्य पदस्य प्रतिबन्धाश्च ६९

२१८. उच्चन्यायालयसम्बन्धिभिः उपबन्धविशेषैः उच्चन्यायालयानां विषयीकरणम् ७०

२१९. उच्चन्यायालयस्य न्यायाधीशानां शपथः, प्रतिज्ञानं वा ७०

२२०. स्थायिन्यायाधीशपदधारणात् परं न्यायाधीशैः विधिवृत्तिकरणे प्रतिषेधः ७०

२२१. न्यायाधीशानां वेतनादीनि ७१

२२२. एकस्मात् उच्चन्यायालयात् अन्यस्मिन् न्यायाधीशस्य स्थानान्तरणम् ७१

२२३. कार्यकारिणः मुख्यन्यायमूर्तेः नियुक्तिः ७१

२२४. अपराणां कार्यकारिणां च न्यायाधीशानां नियुक्तिः ७१

२२४अ. उच्चन्यायालयानां उपवेशनेषु निवृत्तन्यायाधीशानां उपस्थितिः ७२

२२५. विद्यमानानां उच्चन्यायालयानां अधिकारिता ७२

२२६. केषांचित् लेखविशेषाणां प्रचालने उच्चन्यायालयानां शक्तिः ७२

२२६अ. [निरस्तः] ७२

२२७. सर्वेषां न्यायालयानां अधीक्षणे उच्चन्यायालयस्य शक्तिः ७३

२२८. केषांचिद् वादविशेषाणां उच्चन्यायालयाय अन्तरणम् ७४

२२८अ. [निरस्तः] ७४

२२९. उच्चन्यायालयानां अधिकारिणः, सेवकाः, व्यायश्च ७४

२३०. उच्चन्यायालयानां अधिकारितायाः सङ्घराज्यक्षेत्रेषु विस्तारः ७५

२३१. द्वयोः अधिकानां वा राज्यानां अर्थे एकस्य उच्चन्यायालयस्य स्थापना ७५


अध्यायः ६—अधीनस्थाः न्यायालयाः


२३३. मण्डलन्यायाधीशानां नियुक्तिः ७६

२३३अ. केषांचित् मण्डलन्यायाधीशानां नियुक्तीनां, तेभिः प्रदत्तानां निर्णयादीनां च विधिमान्यकरणम् ७६

२३४. न्यायसम्बन्धिसेवायां मण्डलन्यायाधीशेभ्यः अन्येषां जनानां नियोजनम् ७६

२३५. अधीनस्थन्यायालयानां नियन्त्रणम् ७६

२३६. निर्वचनम् ७७

२३७. वर्गविशेषस्य वर्गविशेषाणां वा दण्डाधीशानां एतद् अध्यायस्थैः उपबन्धैः विषयीकरणम् ७७


भागः ७

## प्रथमानुसूचीस्थानि (ख) भागीयराज्यानि


२३८. [निरस्तः] ७८

अनुच्छेदः पृष्ठसंख्या

भागः ८

## सङ्घराज्यक्षेत्राणि

२३९. सङ्घस्य राज्यक्षेत्राणां प्रशासनम् ७९
२३९अ. केषांचित् सङ्घराज्यक्षेत्राणां कृते स्थानीयविधानमण्डलानां, मन्त्रिपरिषदां, उभयोः वा सर्जनम् ७९
२३९आ. विधानमण्डलस्य विश्रान्तिकाले अध्यादेशप्रख्यापने प्रशासकस्य शक्तिः ७९
२४०. केषांचित् सङ्घराज्यक्षेत्राणां कृते विनियमानां प्रणयने राष्ट्रपतेः शक्तिः ८०
२४१. सङ्घराज्यक्षेत्राणां कृते उच्चन्यायालयाः ८१
२४२. [निरस्तः] ८२

भागः ९

## प्रथमानुसूचीस्थ (घ) भागीयराज्यक्षेत्राणि तस्यां अनुसूच्यां न विनिर्दिष्टानि राज्यक्षेत्राणि च

२४३. [निरस्तः] ८३

भागः १०

## अनुसूचितक्षेत्राणि जनजातिक्षेत्राणि च

२४४. अनुसूचितक्षेत्राणां जनजातिक्षेत्राणां च प्रशासनम् ८४
२४४अ. असमराज्यस्य कानिचित् क्षेत्राणि समावेशयतः एकस्य स्वशासिराज्यस्य निर्माणं, तदर्थं, स्थानीयविधानमण्डलस्य वा मन्त्रिपरिषदः वा उभयोः वा सर्जनम् ८४

भागः ११



## सङ्घस्य राज्यानां च परस्परं सम्बन्धाः

अध्यायः १—विधायिनः सम्बन्धाः

### विधायिनीनां शक्तीनां वितरणम्

२४५. संसदा राज्यविधानमण्डलैश्च प्रणीतानां विधीनां विस्तारः ८६
२४६. संसदा राज्यविधानमण्डलेन च प्रणीतानां विधीनां विषयाः ८६
२४७. अपरन्यायालयविशेषाणां स्थापनार्थं उपबन्धयितुं संसदः शक्तिः ८६
२४८. अवशिष्टाः विधानशक्तयः ८६
२४९. राष्ट्रियहितार्थं राज्यसूच्याः कमपि विषयं उद्दिश्य विधेः विधाने संसदः शक्तिः ८६
२५०. यदि आपात-उद्घोषणा प्रवृत्ता अस्ति तर्हि राज्यसूच्याः कमपि विषयं उद्दिश्य विधेः विधाने संसदः शक्तिः ८७
२५१. २४९-२५०-तमानुच्छेदयोः अधीनं संसदा प्रणीतानां विधीनां राज्यविधानमण्डलैः प्रणीतानां विधीनां च मध्ये विसङ्गतिः ८७

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| २५२. | द्वयोः अधिकानां वा राज्यानां कृते सहमत्या विधाने संसदः शक्तिः, अन्येन केनापि राज्येन तादृशस्य विधानस्य अङ्गीकरणम् | ८७ |
| २५३. | आन्ताराष्ट्रियसमयानां कार्यक्षमतायै विधानम् | ८७ |
| २५४. | संसदा प्रणीतानां विधीनां राज्यविधानमण्डलैः प्रणीतानां विधीनां च मध्ये विसङ्गतिः | ८८ |
| २५५. | पुरःप्रशंसनानां, पूर्वस्वीकृतानां च अपेक्षाः केवलं प्रक्रियायाः विषयाः इति अनुदर्शनम् | ८८ |

अध्यायः २—प्रशासनसम्बन्धाः

**साधारणम्**

| | | |
|---|---|---|
| २५६. | राज्यानां सङ्घस्य च आभाराः | ८८ |
| २५७. | अवस्थाविशेषेषु सङ्घस्य राज्येषु नियन्त्रणम् | ८८ |
| २५७अ. | [निरस्तः] | ८९ |
| २५८. | अवस्थाविशेषेषु राज्येभ्यः शक्त्यादीनां प्रदाने सङ्घस्य शक्तिः | ८९ |
| २५८अ. | सङ्घाय कृत्यानां अर्पणे राज्यस्य शक्तिः | ८९ |
| २५९. | [निरस्तः] | ८९ |
| २६०. | भारतात् बहिर्भूतानां राज्यक्षेत्राणां सम्बन्धे सङ्घस्य अधिकारिता | ८९ |
| २६१. | सार्वजनिक्यः क्रियाः अभिलेखाः न्यायसम्बन्धिकार्यप्रवृत्तयश्च | ९० |

**जलैः सम्बध्यमानाः विवादाः**

| | | |
|---|---|---|
| २६२. | आन्ताराज्यिकानां नदीनां नदीद्रोणीनां वा जलैः सम्बन्धिनां विवादानां न्यायनिर्णयनम् | ९० |

**राज्यानां परस्परं समन्वयः**

| | | |
|---|---|---|
| २६३. | आन्ताराज्यिकपरिषदं उद्दिश्य उपबन्धाः | ९० |

**भागः १२**

## वित्तम्, सम्पत्तिः, संविदः, वादाश्च

अध्यायः १—वित्तम्

**साधारणम्**

| | | |
|---|---|---|
| २६४. | निर्वचनम् | ९१ |
| २६५. | विधिप्राधिकारं अन्तरेण कराणां अनधिरोपणीयत्वम् | ९१ |
| २६६. | भातरस्य राज्यानां च सञ्चितनिधयः लोकलेखाश्च | ९१ |
| २६७. | आकस्मिकता निधिः. | ९१ |

**सङ्घस्य राज्यानां च मध्ये राजस्वानां विभाजनम्**

| | | |
|---|---|---|
| २६८. | सङ्घेन उद्गृहीता राज्यैः सङ्गृहीताः विनियोजिताश्च शुल्काः | ९१ |
| २६९. | सङ्घेन उद्गृहीताः सङ्गृहीताश्च किन्तु राज्येभ्यः अर्पिताः कराः | ९२ |
| २७०. | सङ्घेन उद्गृहीताः सङ्गृहीताश्च कराः, तथाच सङ्घस्य राज्यानां च मध्ये विभाजिताः कराः | ९२ |

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| २७१. | सङ्घस्य प्रयोजनार्थं केषुचित् शुल्केषु करेषु च अधिभारः | ९३ |
| २७२. | सङ्घेन उद्गृहीताः सङ्गृहीताश्च कराः ये सङ्घस्य राज्यानां च मध्ये विभाजनीयाः सन्ति | ९३ |
| २७३. | पट्टशणे, पट्टशणनिर्मितेषु वस्तुषु वा निर्यातशुल्कस्य स्थाने अनुदानानि | ९३ |
| २७४. | राज्यानां हितैः सम्बद्धं कराधिरोपणं प्रभावयतां विधेयकानां कृते राष्ट्रपतेः पुरःप्रशंसनस्य आवश्यकता | ९३ |
| २७५. | केभ्यश्चिद् राज्येभ्यः सङ्घाद् अनुदानम् | ९४ |
| २७६. | वृत्तिषु, व्यापारेषु, आजीविकासु, नियोजनासु च कराः | ९५ |
| २७७. | व्यावृत्तयः | ९५ |
| २७८. | [निरस्तः] | ९५ |
| २७९. | शुद्धागमानां गणनादि | ९५ |
| २८०. | वित्तायोगः | ९६ |
| २८१. | वित्तायोगस्य पुरः प्रशंसनानि | ९६ |

**प्रकीर्णाः वित्तीयोपबन्धाः**

| | | |
|---|---|---|
| २८२. | सङ्घेन केनापि राज्येन वा स्वकीयराजस्वेभ्यः क्रियमाणः व्ययः | ९६ |
| २८३. | सञ्चितनिधीनां, आकस्मिकतानिधीनां लोकलेखासु आकलितधनानां, च अभिरक्षादि | ९६ |
| २८४. | लोकसेवकैः न्यायालयैश्च प्राप्तानां वादिनिक्षेपाणां अन्यधनानां च अभिरक्षा | ९६ |
| २८५. | सङ्घसम्पत्तेः राज्यकरेभ्यः विमुक्तिः | ९७ |
| २८६. | भाण्डानां क्रयें विक्रये वा कराधिरोपणविषये निर्बन्धनानि | ९७ |
| २८७. | विद्युति करेभ्यः विमुक्तिः | ९७ |
| २८८. | जलस्य विद्युतः वा विषये राज्येन ग्राह्येभ्यः करेभ्यः कासुचिद् अवस्थासु विमुक्तिः | ९८ |
| २८९. | सङ्घस्य कराधानात् कस्यापि राज्यस्य सम्पत्तेः आयस्य च विमुक्तिः | ९८ |
| २९०. | केषांचित् व्ययानां निवृत्तिवेतनानां च विषये समायोजनम् | ९८ |
| २९०अ. | केभ्यश्चिद् देवस्वं निधिभ्यः वार्षिकः सन्दायः | ९९ |
| २९१. | [निरस्तः] | ९९ |

## अध्यायः २—ऋणग्रहणम्

| | | |
|---|---|---|
| २९२. | भारतशासनस्य ऋणग्रहणम् | ९९ |
| २९३. | राज्यानां ऋणग्रहणम् | ९९ |

## अध्यायः ३—सम्पत्तिः, संविदः, अधिकाराः, दायित्वानि, आभाराः, वादाश्च

| | | |
|---|---|---|
| २९४. | कासुचिद् अवस्थासु सम्पत्तेः, सर्वस्वस्य, अधिकाराणां, दायित्वानां, आभाराणां च उत्तराधिकारः | १०० |
| २९५. | अन्यासु अवस्थासु सम्पत्तेः सर्वस्वस्य अधिकाराणां दायित्वानां आभाराणां च उत्तराधिकारः | १०० |

पृष्ठसंख्या

अनुच्छेदः


२९६. राजगामित्वेन, व्यपगतत्वेन, स्वामिहीनत्वेन वा प्रोद्भूता सम्पत्तिः — १००

२९७. राज्यक्षेत्रीयसागरखण्डे अथवा महाद्वीपीयमग्नतटभूमौ स्थितानां मूल्यवतां वस्तूनां अनन्यार्थिकक्षेत्रसाधनानां च सङ्घे निधानम् — १०१

२९८. व्यापारदीनां करणे शक्तिः — १०१

२९९. संविदः — १०१

३००. वादाः, कार्यप्रवृत्तयश्च — १०१


### अध्यायः ४—सम्पत्तेः अधिकारः


३००अ. विधेः प्राधिकारं विना न जनानां सम्पत्या वियोजनम् — १०२


## भागः १३

## भारतराज्यक्षेत्रस्य अभ्यन्तरे व्यापारः, वाणिज्यं, समागमश्च


३०१. व्यापारस्य, वाणिज्यस्य, समागमस्य च स्वतन्त्रता — १०३

३०२. व्यापार-वाणिज्य-समागमेषु निर्बन्धनाधिरोपणार्थं संसदः शक्तिः — १०३

३०३. व्यापार-वाणिज्य-विषये सङ्घस्य, राज्यानां च विधायिनीषु शक्तिषु निर्बन्धनानि — १०३

३०४. राज्यानां पारस्परिकेषु व्यापार-वाणिज्य-समागमेषु निर्बन्धानानि — १०३

३०५. विद्यमानविधीनां, राज्यस्य एकाधिकारितां उपबन्धयतां विधीनां च व्यावृत्तिः — १०३

३०६. [निरस्तः] — १०४

३०७. ३०२-तमात् आरभ्य ३०४-तमपर्यन्तानां अनुच्छेदानां प्रयोजनानि कार्यान्वितानि विधातुं प्राधिकारिणः नियुक्तिः — १०४


## भागः १४

## सङ्घस्य राज्यानां च अधीनाः सेवाः

### अध्यायः १—सेवाः


३०८. निर्वचनम् — १०५

३०९. सङ्घस्य, राज्यस्य वा सेवां कुर्वतां जनानां नियोजनं, सेवायाः प्रतिबन्धाश्च — १०५

३१०. सङ्घं, किमपि राज्यं वा सेवयतां जनानां पदावधिः — १०५

३११. सङ्घस्य, कस्यापि राज्यस्य वा अधीनं असैनिकरूपेण नियुक्तानां जनानां पदात् च्युतिः, पदात् अपसारणं, पदपङ्क्तौ अवनमनं वा — १०५

३१२. अखिलभारतीयाः सेवाः — १०६

३१२अ. कासुचित् सेवासु पदधारिणां सेवाप्रतिबन्धानां परिवर्तनाय प्रतिसंहरणाय वा संसदः शक्तिः — १०७

३१३. सङ्क्रमणकालिकोपबन्धाः — १०८

३१४. [निरस्तः] — १०८

अध्यायः २—लोकसेवायोगाः


३१५. सङ्घार्थं, राज्यार्थं च लोकसेवायोगाः १०८
३१६. सदस्यानां नियुक्तिः, पदावधिश्च १०८
३१७. लोकसेवायोगस्य कस्यापि सदस्यस्य अपसारणं, निलम्बनं वा १०९
३१८. आयोगस्य सदस्यानां कर्मचारिवृन्दस्य च सेवायाः प्रतिबन्धानां विषये विनियमनिर्माणस्य शक्तिः ११०
३१९. आयोगस्य सदस्यानां एतादृशसदस्यत्वस्य अवसाने पदधारणसम्बन्धे प्रतिषेधः ११०
३२०. लोकसेवायोगानां कृत्यानि ११०
३२१. लोकसेवायोगानां कृत्यानां विस्तारस्य शक्तिः १११
३२२. लोकसेवायोगानां व्ययाः ११२
३२३. लोकसेवायोगानां प्रतिवेदनानि ११२


**भागः १४अ**

## अधिकरणानि


३२३अ. प्रशासनाधिकरणानि ११३
३२३आ. अन्यविषयाणां कृते अधिकरणानि ११३


**भागः १५**

## निर्वाचनानि


३२४. निर्वाचनानां अधीक्षणं, निदेशनं, नियन्त्रणं च निर्वाचनायोगे निधेयत्वम् ११६
३२५. धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य वा आधारेण कस्यापि जनस्य निर्वाचन-नामावल्यां अन्तर्भावार्थं अपात्रत्वस्य अभावः, अथवा विशेषनिर्वाचकनामावल्यां अन्तर्भावार्थं अध्यर्थनायाः निषेधः ११७
३२६. लोकसभायै, राज्यानां विधानसभाभ्यश्च निर्वाचनानां प्राप्तवयस्क-मताधिकाराधारत्वम् ११७
३२७. विधानमण्डलेभ्यः निर्वाचनानां विषये उपबन्धनिर्माणार्थं संसदः शक्तिः ११७
३२८. कस्यचिद् राज्यविधानमण्डलस्य तद्विधानमण्डलाय निर्वाचनानां सम्बन्धे उपबन्धनिर्माणस्य शक्तिः ११७
३२९. निर्वाचनविषयेषु न्यायालयानां हस्तक्षेपस्य निषेधः ११७
३२९अ. [निरस्तः] ११८


**भागः १६**

## कतिपयैः वर्गैः सम्बद्धाः विशेषोपबन्धाः


३३०. अनुसूचितजातीनां, अनुसूचितजनजातीनां च कृते लोकसभायां स्थानानांआरक्षणम् ११९
३३१. लोकसभायां आङ्ग्लभारतीयसमुदायस्य प्रतिनिधित्वम् १२०
३३२. राज्यानां विधानसभासु अनुसूचितजातीनां, अनुसूचितजनजातीनां च कृते स्थानानां आरक्षणम् १२०
३३३. राज्यानां विधानसभासु आङ्ग्लभारतीयसमुदायस्य प्रतिनिधित्वम् १२०
३३४. स्थानानां आरक्षणस्य विशेषप्रतिनिधित्वस्य च संविधानस्य प्रारम्भात् (चत्वारिंशद्वर्षानन्तरं) समाप्तिः १२१
३३५. सेवानां पदानां च कृते अनुसूचितजातीनां अनुसूचितजनजातीनां च अध्यर्थनाः १२१
३३६. कासुचित् सेवासु आङ्ग्लभारतीयसमुदायस्य कृते विशेषोपबन्धाः १२१

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|
| ३३७. | आङ्ग्लभारतीयसमुदायस्य हिताय शिक्षणानुदानार्थं विशेषोपबन्धाः | १२१ |
| ३३८. | अनुसूचितजात्यनुसूचितजनजातिप्रभृतीनां कृते विशेषाधिकारी | १२१ |
| ३३९. | अनुसूचितक्षेत्राणां प्रशासने तथा अनुसूचितजनजातीनां कल्याणस्य विषये सङ्घस्य नियन्त्रणम् | १२२ |
| ३४०. | अप्रगतवर्गाणां दशानां अन्वेषणार्थं आयोगस्य नियुक्तिः | १२२ |
| ३४१. | अनुसूचिताः जातयः | १२२ |
| ३४२. | अनुसूचिताः जनजातयः | १२३ |

भागः १७

**राजभाषा**

अध्यायः १—सङ्घस्य भाषा

| ३४३. | सङ्घस्य राजभाषा | १२४ |
|---|---|---|
| ३४४. | राजभाषार्थं आयोगः, संसदः समितिश्च | १२४ |

अध्यायः २—प्रादेशिकभाषाः

| ३४५. | कस्यापि राज्यस्य राजभाषा अथवा राजभाषाः | १२५ |
|---|---|---|
| ३४६. | एकराज्यस्य राज्यान्तरस्य च मध्ये अथवा कस्यापि राज्यस्य सङ्घस्य च मध्ये संव्यवहारार्थं राजभाषा | १२५ |
| ३४७. | कस्यापि राज्यस्य जनसङ्ख्यायाः केनापि विभागेन भाष्यमाणायाः भाषायाः सम्बन्धे विशेषाः उपबन्धाः | १२५ |

अध्यायः ३—उच्चतमन्यायालयस्य उच्चन्यायालयादीनां च भाषा

| ३४८. | उच्चतमन्यायालये उच्चन्यायालयेषु, तथा च अधिनियमविधेयकादिषु प्रयोक्तव्या भाषा | १२५ |
|---|---|---|
| ३४९. | भाषा सम्बन्धिनः कतिचिद् विधीन् अधिनियमितुं विशेषप्रक्रिया | १२६ |

अध्यायः ४—विशेषनिदेशाः

| ३५०. | व्यथानां निवारणार्थं अभिवेदनेषु प्रयोक्तव्या भाषा | १२६ |
|---|---|---|
| ३५०अ. | प्राथमिकस्तरे मातृभाषायां शिक्षार्थं सुविधाः | १२६ |
| ३५०आ. | भाषाकीयाल्पसङ्ख्यकवर्गाणां कृते विशेषाधिकारी | १२७ |
| ३५१. | हिन्दीभाषायाः विकासार्थं निदेशः | १२७ |

भागः १८

**आपातीयाः उपबन्धाः**

| ३५२. | आपातस्य उद्घोषणा | १२८ |
|---|---|---|
| ३५३. | आपातस्य-उद्घोषणायाः प्रभावः | १३० |
| ३५४. | यदा आपातस्य उद्घोषणा प्रवर्तते तदा राजस्वविभाजनसम्बन्धिनां उपबन्धानां अनुप्रयोगः | १३० |

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|


| | | |
|---|---|---|
| ३५५. | बाह्याक्रमणात्, आभ्यन्तर्याः अशान्तेश्च, राज्यानां संरक्षणस्य सम्बन्धे सङ्घस्य कर्तव्यता | १३० |
| ३५६. | राज्येषु सांविधानिकतन्त्रस्य विफलतादशायां उपबन्धाः | १३० |
| ३५७. | ३५६-तमानुच्छेदस्य अधीनं कृतायाः उद्घोषणायाः अधीनं विधायिनीनां शक्तीनां प्रयोगः | १३२ |
| ३५८. | आपातकाले १९-तमानुच्छेदस्य उपबन्धानां निलम्बनम् | १३३ |
| ३५९. | आपातकाले तृतीयभागेन प्रदत्ताधिकाराणां प्रवर्तनस्य निलम्बनम् | १३४ |
| ३६०. | वित्तीयस्यापातस्य विषये उपबन्धाः | १३५ |


## भागः १९

## प्रकीर्णकम्


| | | |
|---|---|---|
| ३६१. | राष्ट्रपतेः, राज्यपालानां, राजप्रमुखानां च संरक्षणम् | १३७ |
| ३६१अ. | संसदः राज्यानां,विधानमण्डलानां च कार्यप्रवृत्तीनां प्रकाशनस्य संरक्षणम् | १३७ |
| ३६२. | [निरस्तः] | १३८ |
| ३६३. | कतिपयसन्धिसमयादिभ्यः उद्भूतेषु विवादेषु न्यायालयानां हस्तक्षेपस्य निषेधः | १३८ |
| ३६३अ. | देशीयराज्यानां शासकेभ्यः प्रदत्तायाः मान्यतायाः समाप्तिः, तेषां निजकोशानां समापनं च | १३८ |
| ३६४. | महावेलापत्तनानां विमानक्षेत्राणां च कृते विशेषोपबन्धाः | १३८ |
| ३६५. | सङ्घेन दत्तानां निदेशानां अनुवर्तने प्रभावित्वापादने वा असफलतायाः प्रभावः | १३९ |
| ३६६. | परिभाषाः | १३९ |
| ३६७. | निर्वचनम् | १४२ |


## भागः २०

## संविधानस्य संशोधनम्


| | | |
|---|---|---|
| ३६८. | संविधानस्य संशोधनाय संसदः शक्तिः, तदर्थं प्रक्रिया च | १४४ |


## भागः २१

## अस्थायिनः, सङ्क्रमणकालिकाः, विशेषाश्च उपबन्धाः


| | | |
|---|---|---|
| ३६९. | राज्यसूच्याः केषांचिद् विषयाणां सम्बन्धे ते विषयाः समवर्तिसूच्याः इव इति विधिनिर्माणस्य संसदः अस्थायिनी शक्तिः | १४६ |
| ३७०. | जम्मूकश्मीरराज्यस्य सम्बन्धे अस्थायिनः उपबन्धाः | १४६ |
| ३७१. | महाराष्ट्रराज्यस्य, गुजरातराज्यस्य च सम्बन्धे विशेषोपबन्धाः | १४७ |
| ३७१अ. | नागालैंडराज्यस्य सम्बन्धे विशेषोपबन्धाः | १४८ |
| ३७१आ. | असमराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५१ |
| ३७१इ. | मणिपुरराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५१ |
| ३७१ई. | आन्ध्रप्रदेशराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५१ |
| ३७१उ. | आन्ध्रप्रदेशे केन्द्रीयविश्वविद्यालयस्य स्थापना | १५४ |
| ३७१ऊ. | सिक्किमराज्यस्य सम्बन्धे विशेषोपबन्धाः | १५४ |

| अनुच्छेदः | | पृष्ठसंख्या |
|---|---|---|


| | | |
|---|---|---|
| ३७२. | विद्यमानविधीनां प्रवृत्तेः अनुवर्तनं तेषां अनुकूलनं च | १५६ |
| ३७२अ. | विधीनां अनुकूलनाय राष्ट्रपतेः शक्तिः | १५७ |
| ३७३. | निवारकनिरोधे स्थापितानां जनानां सम्बन्धे दशाविशेषेषु आदेशकरणे राष्ट्रपतेः शक्तिः | १५७ |
| ३७४. | 'फेडरल' न्यायालयस्य न्यायाधीशानां तथा 'फेडरल' न्यायालये, सपरिषदः सम्राजः समक्षं वा लम्बितानां कार्यप्रवृत्तीनां सम्बन्धे उपबन्धाः | १५८ |
| ३७५. | संविधानस्य उपबन्धानां अधीनं न्यायालयानां प्राधिकारिणां च कृत्यकरणे अनुवर्तनम् | १५८ |
| ३७६. | उच्चन्यायालयीयन्यायाधीशानां विषये उपबन्धाः | १५८ |
| ३७७. | भारतस्य नियन्त्रकमहालेखापरीक्षकस्य विषये उपबन्धाः | १५९ |
| ३७८. | लोकसेवायोगानां विषये उपबन्धाः | १५९ |
| ३७८अ. | आन्ध्रप्रदेशस्य विधानसभायाः अवधेः विषये विशेषोपबन्धः | १५९ |
| ३७९-३९१. | [निरस्ताः] | १५९ |
| ३९२. | दुष्करत्वनिवारणे राष्ट्रपतेः शक्तिः | १५९ |


भागः २२

## संक्षिप्तं नाम, प्रारम्भः, निरसनानि च


| | | |
|---|---|---|
| ३९३. | संक्षिप्तं नाम | १६० |
| ३९४. | प्रारम्भः | १६० |
| ३९५. | निरसनानि | १६० |
| | प्रथमा अनुसूची | |
| | १. राज्यानि | १६१ |
| | २. सङ्घराज्यक्षेत्राणि | १६६ |
| | द्वितीया अनुसूची | |
| | **अ—भागः**—राष्ट्रपतेः तथा राज्यानां राज्यपालानां कृते उपबन्धाः | १६८ |
| | **आ—भागः**—[निरस्तः] | १६८ |
| | **इ—भागः**—लोकसभायाः अध्यक्षस्य, उपाध्यक्षस्य च तथा राज्यसभायाः सभापतेः उपसभापतेश्च तथा राज्यस्य विधानसभायाः अध्यक्षस्य, उपाध्यक्षस्य च तथा विधानपरिषदः सभापतेः, उपसभापतेश्च सम्बन्धे उपबन्धाः | १६८ |
| | **ई—भागः**—उच्चतमन्यायालयस्य तथा उच्चन्यायालयानां न्यायाधीशानां सम्बन्धे उपबन्धाः | १६९ |
| | **उ—भागः**—भारतस्य नियन्त्रकमहालेखापरीक्षकस्य सम्बन्धे उपबन्धाः | १७२ |
| | तृतीया अनुसूची—शपथानां प्रतिज्ञानानां वा प्ररूपाणि | १७३ |
| | चतुर्थी अनुसूची—राज्यसभायां स्थानानां आवण्टनम् | १७७ |
| | पञ्चमी अनुसूची—अनुसूचितक्षेत्राणां अनुसूचितजनजातीनां च प्रशासनस्य नियन्त्रणस्य च सम्बन्धे उपबन्धाः | १७९ |
| | **अ—भागः**—साधारणम् | १७९ |
| | **आ—भागः**—अनुसूचितक्षेत्राणां अनुसूचितजनजातीनां च प्रशासनं नियन्त्रणं च | १७९ |

पृष्ठसंख्या


इ—भागः—अनुसूचितक्षेत्राणि १८१

ई—भागः—अनुसूच्याः संशोधनम् १८१

षष्ठी अनुसूची —असमस्य, मेघालयस्य तथा मिजोरम-सङ्घराज्यक्षेत्रस्य जनजातिक्षेत्राणां प्रशासनस्य विषये उपबन्धाः १८२

सप्तमी अनुसूची—

सूची १—सङ्घसूची २०१

सूची २—राज्यसूची २०७

सूची ३—समवर्तिनी सूची २११

अष्टमी अनुसूची—भाषा २१६

नवमी अनुसूची—केषांचित् अधिनियमानां विनियमानां च विधिमान्यकरणम् २१७

दशमी अनुसूची—[निरस्ता] २३०

परिशिष्टम् १—सांविधानिकः (जम्मू-कश्मीरसम्बन्धे अनुप्रयोगः) आदेशः १९५४ २३१

परिशिष्टम् २—येषां अपवादानां उपान्तरणानां च अधीनं संविधानं जम्मू-कश्मीरराज्ये अनुप्रयुज्यते तानि निर्दिश्य संविधानस्य विद्यमानपाठस्य पुनः कथनम् २४७

परिशिष्टम् ३—संविधानस्य (चतुश्चत्वारिंशत्तमं संशोधनं) अधिनियमः, १९७८ इत्यस्मात् उद्धरणानि २६५

परिशिष्टम् ४—संविधानस्य (एकोनपञ्चशत्तमं संशोधनं) अधिनियमः, १९८४ २६६

परिशिष्टम् ५—संविधानस्य (एकपञ्चाशत्तमं संशोधनं) अधिनियमः, १९८४ २६८

परिशिष्टम् ६—संविधानस्य (द्विपञ्चाशत्तमंसंशोधनं) अधिनियमः १९८५ २६८अ—उ

संस्कृताङ्ग्लपर्याय सूची २६९

आङ्ग्लसंस्कृतपर्याय सूची २९०

# भारतस्य संविधानम्

प्रस्तावना

**वयं, भारतस्य जना**:, भारतं [1]**[सम्पूर्णप्रभुत्वसम्पन्नं, समाजवादिनं, सम्प्रदाय-निरपेक्षं, लोकतन्त्रात्मकं गणराज्यं]** विधातुं
तस्य समस्तान् नागरिकांश्च
सामाजिकं, आर्थिकं, राजनीतिकं च **न्यायं**;
विचारस्य, अभिव्यक्तेः, आस्थायाः,
धर्मस्य उपासनायाश्च **स्वतन्त्रतां**;
प्रतिष्ठायाः, अवसरस्य च **समतां**
प्रापयितुं;
तेषु सर्वेषु च
व्यक्तिगौरवस्य [2][राष्ट्रस्य एकतायाः,
अखण्डतायाश्च] सुनिश्चायिकां **बन्धुतां**
वर्धयितुं;
कृतदृढसङ्कल्पाः **अस्यां अस्मदीयायां संविधानसभायां** अद्य, ख्रिस्तीये १९४९-तमे वर्षे नवम्बर-मासस्य २६-तमे दिने (२००६-तमे विक्रमसंवत्सरे मार्गशीर्षे शुक्लपक्षे सप्तम्यां तिथौ) **एतेन इदं संविधानं अङ्गीकृतं, अधिनियमितं, आत्मार्पितं च कुर्महे।**

---

१. संविधानस्य (द्विचत्वारिंशत्तमं संशोधनं) अधिनियमः १९७६ इत्यस्य २-अनुभागेन "सम्पूर्ण प्रभुत्व-सम्पन्नं लोकतन्त्रात्मकं गणराज्यं" इति एतेभ्यः शब्देभ्यः प्रति एते शब्दाः संनिवेशिताः।

२. उपर्युक्तस्य अधिनियमस्य उक्तेन अनुभागेन "राष्ट्रस्य एकतायाः" इति एताभ्यां शब्दाभ्यां प्रति एते शब्दाः संनिवेशिताः।

भागः १

## सङ्घः, तस्य राज्यक्षेत्रं च

**सङ्घस्य नाम, राज्यक्षेत्रं च।**

१. (१) भारतं, अर्थात् इण्डिया, राज्यानां सङ्घः भवेत् ।

[1][(२) राज्यानि, तेषां राज्यक्षेत्राणि च तथा भवेयुः यथा प्रथमानुसूच्यां विनिर्दिष्टानि ।]

(३) भारतस्य राज्यक्षेत्रे—

(क) राज्यानां राज्यक्षेत्राणि;

[2][(ख) प्रमथानुसूच्यां विनिर्दिष्टानि सङ्घस्य राज्यक्षेत्राणि; तथा च]

(ग) तादृशानि अन्यानि राज्यक्षेत्राणि यादृशानि सर्माजितानि स्युः,

समाविष्टानि भवेयुः ।

**नूतनराज्यानां प्रवेशः, स्थापना वा।**

२. संसद् विधिना तादृशैः निबन्धनैः प्रतिबन्धनैश्च नूतनानि राज्यानि प्रवेशयितुं स्थापयितुं वा क्षमते यादृशानि सा उचितानि मन्येत ।

२अ. [3][सिक्किमस्य सङ्घेन सह संयोजनम्] संविधानस्य (षट्त्रिंशत्तमं संशोधनं) अधिनियमः, १९७५ इत्यस्य पञ्चमेन अनुभागेन २६-४-१९७५ दिनाङ्कात् निरसितः ।

**नूतनानां राज्यानां निर्माणं; विद्यमानानां राज्यानां क्षेत्राणां, सीम्नां, नाम्नां वा परिवर्तनम् ।**

३. संसद् विधिना—

(क) कस्माद् अपि राज्यात् तस्य राज्यक्षेत्रं पृथक् कृत्य,अथवा द्वे राज्ये अधिकानि वा राज्यानि, राज्यानां भागान् वा संयोज्य, अथवा कस्यापि राज्यस्य भागेन किमपि राज्यक्षेत्रं संयोज्य, नूतनं राज्यं निर्मातुम्;

(ख) कस्यापि राज्यस्य क्षेत्रं वर्धयितुम्;
(ग) कस्यापि राज्यस्य क्षेत्रं ह्रासयितुम्;
(घ) कस्यापि राज्यस्य सीमाः परिवर्तयितुम्;
(ङ) कस्यापि राज्यस्य नाम परिवर्तयितुम्

क्षमते—

[4][परन्तु एतत् प्रयोजनाय किमपि विधेयकं संसदः कतरस्मिन् अपि सदने तावत् न पुरःस्थाप्येत यावद्

---

१. संविधानस्य (सप्तमं संशोधनं) अधिनियमः, १९५६ इत्यस्य २-अनुभागेन (२) खण्डात् प्रति एषः खण्डः संनिवेशितः ।

२. उपर्युक्ताधिनियमस्य उक्तेन अनुभागेन (ख) उपखण्डात् प्रति एषः उपखण्डः संनिवेशितः ।

३. संविधानस्य (पञ्चत्रिंशत्तमं संशोधनं) अधिनियमः, १९७४ इत्यस्य २-अनुभागेन १-३-१९७५ दिनाङ्कात् अन्तर्वेशितः ।

४. संविधानस्य (पञ्चमं संशोधनं) अधिनियमः, १९५५ इत्यस्य २-अनुभागेन पारन्तुकात् प्रति एषः पारन्तुकः संनिवेशितः ।

राष्ट्रपतेः पुरः प्रशंसनं न लभ्यते, यावत् च यत्र विधेयकान्तर्निविष्टायाः प्रस्थापनाया प्रभावः [1] * * * कस्यापि राज्यस्य, राज्यानां वा क्षेत्रस्य, सीम्नां, नाम्नः वा विषये भवति तत्र राष्ट्रपतिना तद्राज्यस्य विधानमण्डलाय तद्विषये विनिर्दिष्टकालावधेः अभ्यन्तरं, अथवा तस्मात् परं, यावत् तेन अनुज्ञप्तं भवेत् तावत् कालाभ्यन्तरं स्वाभिमताभिव्यक्तये, निर्देशितं न भवेत्, तथा च विनिर्दिष्टः कालावधिः, तत्परं अनुज्ञप्तकालावधिः वा समाप्तः न भवेत् ।]

[2][**स्पष्टीकरणम्** १—अस्मिन् अनुच्छेदे (क) खण्डात् (ङ) खण्डान्तेषु भागेषु "राज्य" शब्दः सङ्घस्य राज्य-क्षेत्रं अन्तर्भावयति, किन्तु पारन्तुके "राज्य" शब्दः सङ्घस्य राज्यक्षेत्रं न अन्तर्भावयति ।

**स्पष्टीकरणम्** २—(क) खण्डेन संसदे प्रदत्तः अधिकारः कस्यापि राज्यस्य भागं वा, सङ्घस्य राज्यक्षेत्रस्य भागं वा, अन्यस्य राज्यस्य, सङ्घस्य वा राज्यक्षेत्रस्य भागेन संयोज्य नूतनराज्यनिर्माणस्य, नूतनसङ्घराज्यक्षेत्र-निर्माणस्य वा अधिकारं अन्तर्भावयति ।]

**प्रथमानुसूचीं चतुर्थानुसूचीं च संशोधयितुं, अनुपूरकप्रासङ्गिकानुषङ्गिकविषयेषु उपबन्धयितुं च द्वितीय-तृतीयानुच्छेदयोः अधीनं प्रणीताः विषयः ।**

४. (१) द्वितीये, तृतीये वा अनुच्छेदे निर्दिष्टः कोपि विधिः प्रथमानुसूच्याः चतुर्थानुसूच्याश्च संशोधनार्थं तादृशान् उपबन्धान् अन्तर्वेशयेत् यादृशाः तस्य विधेः उपबन्धान् क्रियान्वितान् कर्तुं आवश्यकाः स्युः ; तथाच तादृशान् अनुपूरकान्, आनुषङ्गिकान्, पारिणामिकान् अपि उपबन्धान् (तादृशेन विधिना प्रभावितस्य राज्यस्य विधानमण्डले वा राज्यानां विधानमण्डलेषु वा संसदि वा प्रतिनिधित्वसम्बद्धैः उपबन्धैः सहितान्) अन्तर्वेशयेत्, यादृशान् संसद् आवश्यकान् मन्येत ।

(२) पूर्वोक्तसदृशः कोपि विधिः ३६८-तमानुच्छेदस्य प्रयोजनानां कृते अस्य संविधानस्य संशोधनं इति न मन्येत ।

---

१. 'प्रथमसूच्याः "क" भागे "ख" भागे वा उल्लिखितस्य' इति एतत् संविधानस्य (सप्तमं संशोधनं) अधि-नियमः, १९५६ इत्यस्य २९-अनुभागेन अनुसूच्या च लोपितम् ।

२. संविधानस्य (अष्टमं संशोधनं) अधिनियमः, १९६६ इत्यस्य २-अनुभागेन एते स्पष्टीकरणे अन्तर्वेशिते ।

## भागः २

# नागरिकता

५. अस्य संविधानस्य प्रारम्भे सः प्रत्येकं जनः यस्य भारतस्य राज्यक्षेत्रे अधिवासः विद्यते, तथा च—

संविधानस्य प्रारम्भे नागरिकता।

(क) यस्य भारतस्य राज्यक्षेत्रे जन्म अभूत्; अथवा

(ख) यस्य मातापित्रोः अन्यतरस्य भारतस्य राज्यक्षेत्रे जन्म अभूत् ; अथवा

(ग) यः तादृशात् प्रारम्भात् अव्यवहितपूर्वं पञ्चवर्षेभ्यः अन्यूनं भारतस्य राज्यक्षेत्रे सामान्यतः निवसन् वर्तते,

भारतस्य नागरिकः भवेत् ।

६. पञ्चमानुच्छेदे यत् किमपि सत्यपि यः पाकिस्ताने इदानीं अन्तर्भावितात् राज्यक्षेत्रात् भारतस्य राज्यक्षेत्रं प्रति प्रव्रज्य आगतः अस्ति, स जनः अस्य संविधानस्य प्रारम्भे भारतस्य नागरिकः इति मन्येत यदि—

पाकिस्तानतः प्रव्रज्य भारतं आगतानां केषांचित् जनानां नागरिकताधिकाराः।

(क) सः अथवा तस्य मातुः पितुः अन्यतरः, पितामह्याः पितामहस्य वा अन्यतरः, मातामह्याः मातामहस्य वा अन्यतरः, १९३५-वर्षस्य भारतशासनाधिनियमेन (यथामूलाधिनियमितरूपेण) परिभाषिते भारते अजनिष्ट, तथा च

(ख) (१) यदि सः जनः तादृशः अस्ति यः १९४८-वर्षस्य जुलायिमासस्य एकोनविंशात् दिनात् पूर्वं एवं प्रव्रजितः अस्ति, तर्हि यदि सः प्रव्रजनदिनात् आरभ्य भारतस्य राज्यक्षेत्रे सामान्यतः निवसन् वर्तते; अथवा

(२) यदि स जनः तादृशः अस्ति यः १९४८-वर्षस्य जुलायिमासस्य एकोनविंशतितमे दिने, ततः परं वा एवं प्रव्रजितः अस्ति, तर्हि यदि भारतीयाधिनिवेशशासनेन तदर्थं नियुक्तेन अधिकारिणा, तादृश अधिकारिणे अस्य संविधानस्य प्रारम्भात् पूर्वं तत् शासनेन विहिते प्ररूपे विहितया रीत्या च तदर्थं तेन कृतावेदनानन्तरं भारतस्य नागरिकः इति पञ्जीबद्धः अस्ति—

परन्तु कोपि जनः एवं पञ्जीबद्धः न भवेत् यदि सः स्वीयावेदनदिनात् अव्यवहितपूर्वं न्यूनात् न्यूनं षण्मासान् भारतस्य राज्यक्षेत्रे निवसन् न वर्तते ।

७. पञ्चम-षष्ठानुच्छेदयोः यत् किमपि सत्यपि १९४७-वर्षस्य मार्चमासस्य प्रथमात् दिनात् परं भारतस्य राज्यक्षेत्रात् पाकिस्ताने इदानीं अन्तर्भावितं राज्यक्षेत्रं प्रव्रजितः यः जनः अस्ति, सः भारतस्य नागरिकः न मन्येत—

पाकिस्तानं प्रव्रजितानां केषांचित् नागरिकताधिकाराः।

परन्तु एतदनुच्छेदगतं किमपि तं जनं न विषयीकुर्यात् यः पाकिस्ताने इदानीं अन्तर्भावितं राज्यक्षेत्रं एवं प्रव्रजितः भूत्वा कस्यापि विधेः प्राधिकारेण, तदधीने वा दत्तायाः अनुज्ञायाः अधीनं पुनर्निवासार्थं, स्थायिप्रत्यावर्तनार्थं वा भारतस्य राज्यक्षेत्रं प्रतिनिवृत्तः अस्ति; किञ्च एतादृशः प्रत्येकं जनः षष्ठानुच्छेदगतस्य (ख) खण्डस्य प्रयोजनानां कृते १९४८-वर्षस्य जुलायिमासस्य एकोनविंशात् दिनात् परं भारतस्य राज्यक्षेत्रं प्रव्रजितः अस्ति इति मन्येत ।

८. पञ्चमानुच्छेदे यत् किमपि सत्यपि यः कोपि जनः, यस्य मातुः पितुः अन्यतरः; पितामह्याः, पितामहस्य अन्यतरः, मातामह्याः मातामहस्य अन्यतरः वा १९३५-वर्षस्य भारतशासनाधिनियमेन (यथामूलाधिनियमितरूपेण) परिभाषिते भारते अजनिष्ट, यश्च एवं परिभाषितात् भारतात् बहिः कस्मिन् अपि देशे सामान्यतः निवसन् अस्ति

भारतात् बहिः निवसतां भारतीयसमुद्भववत केषांचित् जनानां नागरिकताधिकार :।

सः जनः भारतस्य नागरिकः इति मन्येत्, यदि अस्य संविधानस्य प्रारम्भात् पूर्वं, परं वा भारताधिनिवेशस्य शासनेन, भारतस्य शासनेन वा, विहिते प्ररूपे विहितया रीत्या च, तेन तदानीं अध्युषिते देशे विद्यमानाय भारतस्य राजनयिकाय वाणिज्यदूतकाय वा प्रतिनिधये नागरिकतावाप्त्यर्थं तेन आवेदने कृते सति, तादृशेन राजनयिकेन, वाणिज्यदूतकेन वा प्रतिनिधिना सः भारतस्य नागरिकः इति पञ्जीबद्धः अस्ति ।

**यैः स्वेच्छयार्जिता वैदेशिकनागरिकता, न तेषां जनानां नागरिकता ।**

९. यदि केनापि जनेन स्वेच्छया वैदेशिकनागरिकता अर्जिता अस्ति, तर्हि सः पञ्चमानुच्छेदस्य आधारेण भारतस्य नागरिकः न भवेत्; न च षष्ठानुच्छेदस्य सप्तमानुच्छेदस्य वा आधारेण भारतस्य नागरिकः इति मन्येत ।

**नागरिकताधिकाराणां अनुवृत्तिः ।**

१०. यः कोपि जनः एतस्य भागस्य पूर्वगामिनां उपबन्धानां अन्यतमस्य कस्यापि अधीनं नागरिकः अस्ति तथा वा मन्यते सः संसदा यः कोपि विधिः प्रणीतः भवेत् तस्य उपबन्धानां अधीनं भारतस्य नागरिकतया अनुवर्तेत ।

**संसदा विधिना नागरिकताधिकार-विनियमनम् ।**

११. एतस्य भागस्य पूर्वगामिनां उपबन्धानां किमपि नागरिकतार्जन-समापने, नागरिकतासम्बद्धान् अन्यान् सर्वान् विषयान् च उद्दिश्य कस्यापि उपबन्धस्य निर्माणे संसदः शक्तिं न अल्पीकुर्यात् ।

भागः ३

# मूलाधिकाराः

## साधारणम्

१२. अस्मिन् भागे, यावत् सन्दर्भेण अन्यथा अपेक्षितं न भवेत् तावत्, "राज्य" इति शब्दः भारतस्य शासनं, संसदं च, प्रत्येकं राज्यानां शासनं, विधानमण्डलं च, तथा भारतस्य राज्यक्षेत्राभ्यन्तरान् भारतस्य नियन्त्रणाधीनान् वा, सर्वान् स्थानीयान् अन्यान् च प्राधिकारिणः अन्तर्भावयति ।

**परिभाषा ।**

१३. (१) अस्य संविधानस्य प्रारम्भात् अव्यवहितपूर्वं भारतस्य राज्यक्षेत्रे प्रवृत्ताः सर्वे विधयः तावन्मात्रं शून्याः भवेयुः यावत् ते अस्य भागस्य उपबन्धैः असङ्गताः भवेयुः ।

**मूलाधिकारैः असङ्गताः तेषां अल्पीकराः वा विधयः ।**

(२) राज्यं तादृशं कमपि विधिं न प्रणयेत्, यः एतेन भागेन प्रदत्तान् अधिकारान्, अपहरति, अल्पीकरोति वा; अथ च अस्य खण्डस्य उल्लङ्घनेन प्रणीतः विधिः उल्लङ्घनमात्रां यावत् शून्यः भवेत् ।

(३) एतस्मिन् अनुच्छेदे यावत् सन्दर्भेण अन्यथा अपेक्षितं न भवति तावत्—

(क) "विधि" शब्दः भारतस्य राज्यक्षेत्रे विधिशक्तिधरं यं कमपि अध्यादेशं, आदेशं, उपविधिं, नियमं, विनियमं, अधिसूचनां, रूढ़िं, प्रथां च अन्तर्भावयति;

(ख) "प्रवृत्ताः सर्वे विधयः" इति शब्दसमूहः केनापि विधानमण्डलेन, अन्येन च क्षमेण प्राधिकारिणा भारतस्य राज्यक्षेत्रे, अस्य संविधानस्य प्रारम्भात् पूर्वं पारितान्, प्रणीतान् वा, पूर्वं अनिरस्तान् च विधीन् अपि अन्तर्भावयति, यद्यपि तादृशः कोपि विधिः, तस्य कोपि भागो वा पूर्णतया, विशिष्टेषु क्षेत्रेषु वा; तदा प्रवृत्तः न भवेत् ।

[1][(४) एतद् अनुच्छेदगतं किमपि ३६८-तमानुच्छेदाधीनं अस्य संविधानस्य किमपि संशोधनं न विषयीकुर्यात् ।]

## समतायाः अधिकारः

१४. भारतस्य राज्यक्षेत्रे राज्यं कमपि जनं विधिसमक्षे समतायाः विधीनां समसंरक्षणात् वा वञ्चितं न कुर्यात् ।

**विधिसमक्षे समता ।**

१५. (१) राज्यं कमपि नागरिकं प्रति केवलं धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य, जन्मस्थानस्य वा, एतेषां अन्यतमस्य वा कस्यापि आधारतः विभेदं न कुर्यात् ।

**धर्मस्य, मूलवंशस्य, जातेः लिङ्गस्य, जन्मस्थानस्य वा, आधारतः विभेदस्य प्रतिषेधः ।**

(२) कोपि नागरिकः केवलं धर्मस्य, मूलवंशस्य, जातेः, लिङ्गस्य, जन्मस्थानस्य वा, एतेषां अन्यतमस्य वा कस्यापि आधारतः—

(क) आपणेषु, सार्वजनिकभोजनालयेषु, विश्रामालयेषु, सार्वजनिकमनोरञ्जनस्थानेषु च प्रवेशविषये;

(ख) राज्यनिधितः पूर्णतः अंशतः वा पोषितानां साधारणजनतायाः उपयोगाय समर्पितानां कूपानां, तडागानां, स्नानतीर्थानां, मार्गाणां सार्वजनिकसमागमस्थलानां वा उपयोगस्य विषये,

निर्योग्यतायाः, दायित्वस्य, निर्बन्धनस्य, प्रतिबन्धनस्य वा अधीनः न भवेत् ।

(३) एतदनुच्छेदगतं किमपि स्त्रीणां, बालानां च कृते कस्यापि विशेषोपबन्धस्य करणात् राज्यं न निवारयेत् ।

---

१. संविधानस्य (चतुर्विंशतितमं संशोधनं) अधिनियमः, १९७१ इत्यस्य २-अनुभागेन एषः खण्डः संनिवेशितः ।

